Calcutta Oriental Series
No. 6. O. BT. 1.




# CHĀNAKYA-KATHĀ (चाणक्य कथा)

BY

RAVINARTAKA

WITH A BENGALI TRANSLATION

BY

SATISH CHURN LAW

Calcutta Oriental Series

No. 6 0 BT. 1.

# CHĀNAKYA-KATHĀ (चाणक्य कथा)

BY

RAVINARTAKA

WITH A BENGALI TRANSLATION

BY

SATISH CHURN LAW

With a Prefatory Note

BY

NARENDRA NATH LAW, M.A., B.L.,

*Premchand Roychand Scholar*



Calcutta.

PRINTED BY TARAPRASANNA DAS GUPTA,
SANSKRIT PRESS,
*124/2/1, Manicktolla Street.*
1921



*Price Re 1/-*

## CALCUTTA ORIENTAL SERIES.

| | | Rs. | as. | p. |
|---|---|---|---|---|
| 1. | Yuktikalpataru ... ... | 2 | 8 | 0 |
| 2. | Chanakya-Rajaniti Sastram (2nd edition) ... | 0 | 14 | 0 |
| 3. | Harilila by Vopadeva ... | 1 | 4 | 0 |
| 4. | Inter-state Relations in Ancient India, Part 1. | 2 | 0 | 0 |
| 5. | Muktaphalam by Vopadeva with the commentary of Hemadri Part 1 ... ... | 3 | 0 | 0 |

Published by BAIDYA NATH DUTT,
26, Vidyasagar Street
CALCUTTA

# PREFATORY NOTE

This work edited and published for the first time from manuscript was procured about a year ago from the Library of the Raja of Cochin. It gives in a versified form a story which is materially similar to the plot of the famous Sanskrit drama *Mudrarakshasa* by Visakhadatta It is based upon a prose original referred to in the third couplet of the work. "*Chanakyasya katha seyam vidyate gadyarupini. Athatam padyatannetumudyato Ravinartakah*" (This *katha* of Chanakya exists in prose. Ravinartaka is now attempting to render it into verses.) Professor H. H. Wilson mentions, in his preface to the *Mudrarakshasa*, in the *Theatre of the Hindus*, Vol II. p. 141, a sanskrit manuscript in the collection of Col Mackenzie in Telinga character which purported to be an introduction to the said drama to make its plot more lucid. This was written by Dhundhi, son of Lakshmana. I could not find out the name and details about this manuscript in Prof. Wilson's Mackenzie Collection (second edition), which leaves me in doubt as to whether this work was in prose or verse, and no inference can therefore be drawn as to whether it was the same as, or similar to this *Chanakya-Katha* or its prose original. The summary of its contents as given by Prof. Wilson in the said preface resembles the story of the *Chanakya-Katha* In both we find mention of two wives of the monarch Nanda (Sarvārthasiddhi) one of whom was of Sūdra extraction and named Murā, while the other was called Sunandā. The former gave birth to one son called Maurya to

whom was born a hundred sons of whom Chandragupta was the youngest, the latter being delivered of nine sons called the Nine Nandas. Thus, Chandragupta, in both the accounts, is a grandson of Mura and not her son.

The sending of a waxen lion in a cage to the court of Nandas by another king (the manuscript text has Vanka which may be a wrong transcript for Lanka though it has been rendered into Vanga in the translation), the attempt to kill Maurya with his hundred sons by starving them in an underground hollow, the death of all of them at the place except Chandragupta who was brought out to solve the problem propounded to the king in connection with the sending of the lion in the cage, appear common to both the *Chanakya Katha* and the manuscript. I need not relate the later incidents of the story as they are essentially similar to those of the drama.

The most noteworthy points in the *Chanakya-Katha* for historical purposes are (1) the description of Chandragupta as a grandson of Mura, and (2) the reference to the use of *salaka* by which the order of the nine Nandas for carrying on the administration, each one year by turn, was determined. It is well-known that the intervention of nine Nandas in the chronology of Nanda dynasty presents a good deal of difficulty, if they be taken to have been lineal descendants and to have succeeded to the throne one after another. It is remarked by Mr. V. Smith in his 'Early History of India' (3rd edition), p. 42 that the "period of fifty years has been assumed as being credible and fitting into the chronological scheme which does not

give room for a dynasty lasting a century." If the nine Nandas be taken to have come to the throne annually by turn, the period advocated above is not exceeded. The interpretation of 'Nava Nanda' as 'Neo-Nandas', as done by Mr. K. P. Jayswal in the *Journal of the Behar & Orissa Research Society*, Vol I, Part I, p. 87, need not be resorted to, if the accounts of the *Chanakya-Katha* be taken to be of a superior force.

It is the opinion of some scholars that the plot of the *Mudrarakshasa* is based on accurate information and ancient court tradition. It would have been a valuable accession to our knowledge if it could have been known for certain that the prose original of the *Chanakya-Katha* was a repository of such information and tradition. Though the manuscript of the Mackenzie collection was written by a pandit with the express object of relating details for making the *Mudrarakshasa* easily intelligible, it is not known whether the *Chanakya-Katha* and, for the matter of that, its prose original, were also meant to be but commentaries on the plot of the drama. If they be such, the production of the two, later than the *Mudrarakshasa* like the said manuscript is certain. But such an assertion is not found in the *Chanakya-Katha* which leaves it probable that its prose original was a repository of information of the kind referred to above, which the drama used for its materials.

96, Amherst Street,
CALCUTTA, 1921.

NARENDRA NATH LAW

श्रीश्रीहरिः शरणम् ।




# चाणक्यकथा ।

## रविनर्त्तक-विरचिता ।

श्रीगुरुचरणारविन्दाभ्यान्नमः ।

स्वभावमहितैर्व्वंशैः पुष्णन् विबुधसम्पदम् ।
ख्यापितोगोभिरयशाभिः श्रीमान् नारायणोऽवतु ॥ १ ॥
बुद्धिरेव जयत्येका पुंसः सर्व्वार्थसाधनी ।
यद्बलादेव किं किन्न चक्रे चाणक्यभूसुरः ॥ २ ॥
चाणक्यस्य कथा सेयं विरच्यते गद्यरूपिणी ।
अथ तां पश्यतावेतु सुधतोरविनर्त्तकः ॥ ३ ॥
नयप्रयोगमाचण्डास्फुरद्वीराद्भुतात्मना ।
अनया कथया कोऽपि मतिमानतिमाद्यति ॥ ४ ॥
अस्ति सुस्थितभूपालवृन्दं मन्दाकिनीतटे ।
रत्नांशुपाटलीभूतं पाटलिपुत्रकं पुरम् ॥ ५ ॥
बहुजातिसमाकीर्णमशोकोदयशोभनम् ।
भूमौ तिलकभूतं यदाहुः पुष्प-पुरं जनाः ॥ ६ ॥
सर्व्वार्थसिद्धिस्तत्रासीद्राजानन्दापराभिधः ।
अमात्यश्चाभवत्तस्य राक्षसो नाम दक्षधीः ॥ ७ ॥

सोऽलङ्कोपनिवासश्च रामादिषु निरादरः ।
नयज्ञेषु प्रसन्नात्मा सत्यं राक्षस एव सः ॥ ८ ॥
सोऽथ राजा सुनन्दाख्यामविन्दन्नृपनन्दनाम् ।
मुराख्यां शूद्रपुत्रीं च स्मरास्त्रस्येव देवताम् ॥ ९ ॥
सुन्दरीभ्यां चिरं ताभ्यां नन्दितो नन्दभूपतिः ।
नन्दनानुदयात् सोऽयमन्तश्चिन्तामधात् क्रमात् ॥ १० ॥
तावदस्य पुरम्प्राप कोऽपि तापसपुङ्गवः ।
अर्घ्य-पाद्यादिभिश्चैनमानयामास भूमिपः ॥ ११ ॥
तस्यार्घं प्रिययोर्मूर्ध्नि नृपश्चिक्षेप पावनम् ।
तत्र चैकं पयोबिन्दुन्मुरा प्राप पराश्च ॥ १२ ॥
बिन्दुश्च तमसि प्रीत्या भक्त्या प्रत्यग्रहीन्मुरा ।
स निम्नेव तान् दध्रे सुनन्दावलिमालिनी ॥ १३ ॥
मुदा तयोस्तदाकारं सोऽतिप्रीतो मुरां प्रति ।
लब्धकार्यश्च भूपालान्निर्गतोऽभूत्तपोधनः ॥ १४ ॥
ततोऽचिरेण कालेन धन्या गर्भमधान्मुरा ।
सुषुवे च महावीर्यं मौर्याख्यं महिमालयम् ॥ १५ ॥
प्राप्तकालश्च तं राजा तनयं विनयान्वितम् ।
पाठयामास शस्त्राद्यं शास्त्रादीनि तयोर्विना ॥ १६ ॥
तस्मिंस्तुष्टोऽभवद्राजा सोऽपि तस्य मते स्थितः ।
मातुश्च हृदयानन्दं चक्रे जनपदस्य च ॥ १७ ॥
ततो देवी सुनन्दापि गर्भं दध्रे चिरेप्सितम् ।
नृपोऽपि गर्भसंस्कारान् क्रमेण व्यतनोन्मुदा ॥ १८ ॥
ततः सा दशमे मासि मांसपिण्डमजीजनत् ।
तं दृष्ट्वा खेदमापेदे सामात्यान्तःपुरो नृपः ॥ १९ ॥

अथान्तरिक्षे राजानं वागुवाचाऽशरीरिणी।
राजन् न त्वन्निपातेन सम्पन्ना नव ते सुताः॥ २०॥
इत्याकर्ण्यापि भूपाले शोकव्याकुलिते स्थिते।
विचिन्त्य राक्षसो धीमान् गान्धारी-वृत्तमस्मरत्॥ २१॥
स पिण्डं नवधा कृत्वा मांसपिण्डानमून् पुनः।
तैलाधारेषु निक्षिप्य ररक्ष किल राक्षसः॥ २२॥
ततः कालेन युगपत् कुमारा नव जज्ञिरे।
राजा च मुदितस्तेषां जातकर्मादिकाः क्रियाः॥ २३॥
प्राप्तविद्यान् धनुर्वेदपारगान् पूर्णयौवनान्।
पुत्रानाहूय भूपालो मन्त्रयामास मन्त्रिभिः॥ २४॥
नवस्वेषु न पुत्रेषु ज्येष्ठं पश्यामि काञ्चन।
यस्मिन् भारमिमं न्यस्य विश्रान्तः सुखमाप्नुयाम्॥ २५॥
तद्ब्रूत यूयं कर्त्तव्यं युष्मद्दृष्टिरहं किल।
मौर्य्यस्य सैन्यपतित्वे कल्पयामीति निश्चितम्॥ २६॥
तच्छ्रुत्वाऽचिन्तयन् मौर्य्यो ज्येष्ठ पुत्रं कथं नु माम्।
दासं सेनापतित्वाजे क्षिपत्यस्मेष्वयानिव॥ २७॥
राज्यैकदेशमात्रं वा प्रदास्यत्येव मन्यते।
न्यूनमेतत् सुतैर्वापि मन्त्रिभिर्वा प्रयोजितम्॥ २८॥
अतः परस्पर क्षोभमेषां जनयाम्यहम्।
इति निश्चित्य भूपालमाबभाषे मुरासुतः॥ २९॥
स्वच्छन्दतः कामध्येषु कृत्वा राजानमादरात्।
करोतु स भवानन्यानष्टौ तदुपजीविनः॥ ३०॥
नैतत् साध्विति राजोक्ते नक्रनाशोऽब्रवीदिदम्।
नन्दराज्यं स कृस्यन्न नवधा क्रियतामिति॥ ३१॥

ततः पुरमिदं कस्येत्युक्तवाक्ये मुरात्मजे ।
चिन्तयामास मन्त्रज्ञो मनसा राक्षसस्स्वयम् ॥ ३२ ॥
अयं हि दृषलीपुत्रः सापत्न्यं सम्प्रदर्शयन् ।
राजपुत्राभिमानी वै भेदं जनयति स्वयम् ॥ ३३ ॥
मयि जीवति न त्वस्य धार्ष्ट्यमत्र प्रगल्भते ।
इति निश्चितधीः प्राह हे कुमारा ! वदामि वः ॥ ३४ ॥
पुरं पुष्पपुरप्रख्या विधास्यन्ते नृपाज्ञया ।
कोशहस्त्यादिकञ्चैव नवधा प्रविधास्यते ॥ ३५ ॥
करिष्यते व्यवस्थापि 'शलाका'ख्यपरीक्षया ।
तद्वशादागतो भागो युष्माभिरनुभुज्यताम् ॥ ३६ ॥
इत्येवं राक्षसेनोक्ते मौर्य्यः सस्मित मूचिवान् ।
ननु पुष्पपुरस्यास्य पुष्पपाटोऽपि नाकजित् ॥ ३७ ॥
तद्वत् किल पुराण्यष्टौ करिष्यन्ते बताद्भुतम् ।
इति मौर्य्योदितं श्रुत्वा कुमाराः प्रोचुरुन्मदाः ॥ ३८ ॥
किमत्र भूरिजल्पितैरियं पुरी ममैव चेत् ।
वहाम्यहं महीभारं न चेद्गतोऽस्मि काननम् ॥ ३९ ॥
समस्तं वसु सर्व्वेषां कृत्वा साधारणं नृपः ।
सर्व्व एवाभिषिच्यन्तामिति मौर्य्योऽवदत्तदा ॥ ४० ॥
राजाह शक्यते नैवमन्योन्यापेक्षया यतः ।
नैकोऽपि राज्यमुक्तः स्यात्तेनेदं न च रोचते ॥ ४१ ॥
मनुवत्सरमेकैकं कल्पयामि महीपतिम् ।
अन्यथा कलहायेरन् कुमारा भोगलोलुपाः ॥ ४२ ॥
ततस्तद्राजसदनं मागधस्तेषु सन्निपु ।
कस्तर्हि प्रथमे वर्षे राजेत्याह मुरासुत, ॥ ४३ ॥

तच्छ्रुत्वा मोहिता प्राहुरेकवाक्यं कुमारकाः ।
अहमेवाग्रतो राजा नोचेद् गास्यामि काननम् ॥ ४४ ॥
इति श्रुत्वाचचक्षे स राक्षसः सान्त्वयन्निमान् ।
द्विषतामवकाशाय निर्बन्धो भवतामयम् ॥ ४५ ॥
युष्माभिर्माननीयोऽयं दैवादेशो मनस्विभिः ।
पौर्व्वापर्य्येऽपि वर्णानां नियमोऽस्तु शलाकया ॥ ४६ ॥
अथ तुष्टो महीपालो नन्दनामाङ्कितानिमान् ।
अभिषिच्य महीचक्रं चक्रेण नवनायकम् ॥ ४७ ॥
सैनापत्ये सुरापत्यं कृत्वा भेदभयादयम् ।
न्ययुङ्क्त राक्षसादींश्च मन्त्रिणो मन्त्र-निश्चये ॥ ४८ ॥
अवतार्य्य भुवोभारमात्मजेषु प्रशान्तधीः ।
वनं प्रस्थाय कामोऽपि स पौरैरर्थितोऽवसत् ॥ ४९ ॥
अथ नन्दतनुजनन्दिता सा पृथिवी गोपवधूरिवावभासे ।
अपि च प्रतिवर्षमेकैकः पतिर्मेतद्रूपाकजेव रेजे ? ॥ ५० ॥
नवभर्त्तृषु भक्तिरत्युदारासृष्णमित्यपि सत्यमेव जातम् ।
यदियं प्रननन्द नन्दभूमिर्नयभूपालसमागता तदानीम् ॥ ५१ ॥
तदिदं राक्षसादीनां मन्त्रिणामतिवैभवम् ।
बहुनायकमप्येतद्राज्यं न व्यानिसाययत् ॥ ५२ ॥
सेनापतिस्तु मौर्य्यस्य कालेन कियता गतम् ।
पुत्रा बभूवुस्ते शूराः शतास्त्वाथाभवन् क्रमात् ॥ ५३ ॥
कनीयानपि सर्व्वेषां चन्द्रगुप्ताभिधः सुतः ।
भागधेयो गुणोत्कर्षैरेषु ज्यायानिवाभवत् ॥ ५४ ॥
तैर्जनानन्दजननैर्निजबुद्ध्यनुसारिभिः ।
रञ्जयामास भूचक्रं तनयैः स नयैरिव ॥ ५५ ॥

वर्षमात्रावसायित्वादाधिपत्यस्य भूभृताम् ।
सैनापत्यस्य नित्यत्वाद् राजपुत्त्वगौरवात् ॥ ५६ ॥
तनयानाञ्च सौशील्यात् कौशलादपि नीतिषु ।
राज्यं मौर्य्यवशप्रायमासीद्‌गुणवतां हि भूः ॥ ५७ ॥
तदेतद्राक्षसादाय राजानश्च न सेहिरे ।
गूढ़ञ्च मन्त्रयामासुर्गाढमत्सर-मोहिताः ॥ ५८ ॥
हा कष्टं क्रमशोऽस्माभिर्भुज्यमानापि मेदिनी ।
वारनारीव जारस्य मौर्य्यस्यैव वशङ्गता ॥ ५९ ॥
स्थिता राजतया केचिदन्ये मन्त्रितया स्थिताः ।
भृत्यस्यैव करे भूमिरिति लज्जाकरं महत् ॥ ६० ॥
आदितो दर्शितद्वेष. सपत्नः कुलद्विषाम् ।
सदायैव मष्टः स्यादयः स्त्रो वा हता वयम् ॥ ६१ ॥
रक्षराज्यैरमौभिश्च मत्यवष्टेऽडिग्दय ते ।
एकपक्षेऽवमिथ्येरन् नृपा हिताय मन्त्रिणः ॥ ६२ ॥
तस्माद् गूढवधः कार्य्यो मौर्य्याणामिति निश्चिताः ।
रायममसुखायकुर्मस्थमण्डपिकां पुरे ॥ ६३ ॥
सुरङ्गाऽदीर्घमार्गेण दुष्प्रवेशा हि सा बहिः ।
अन्तरत्यन्तविस्तीर्णा मन्त्रिणामिव धीसुधी ॥ ६४ ॥
तां प्रविश्य मन्त्रीपालाः मविचाय दिने दिने ।
स पुत्रेण च मौर्य्येण साकं कार्य्याण्यचिन्तयन् ॥ ६५ ॥
कदाचित् पुरुषः प्राप्य मौर्य्यं सत्वरमूचिवान् ।
मन्त्रार्थं मण्डपे भूपास्त्वां प्रतीक्ष्य स्थिता इति ॥ ६६ ॥
तच्छ्रुत्वा सम्भ्रमान्मौर्य्यः पुत्त्वैरावमयैः समम् ।
सुरङ्गां प्राविशत् को वा लङ्घयेद् भवितव्यताम् ॥ ६७ ॥

तेषु प्रविष्टमात्रेषु कष्टं पृष्ठे निपातितैः ।
शिलासङ्घैः सुरङ्गा सा निरुद्धा समदृश्यत ॥ ६८ ॥
किमेतदिति सम्भ्रान्ताः प्रविष्टास्ते गुहोदरम् ।
तत्रापि बध्य-चिह्नानि ददृशुर्न तु भूमिपान् ॥ ६९ ॥
भोजनं भाजनग्रते तेषां प्रत्येकमर्पितम् ।
दीपिकाश्च पृथङ् न्यस्ता बधाधारस्तथा किल ॥ ७० ॥
तद्दृष्ट्वा शोकसन्तप्ता हन्त ते समचिन्तयन् ।
मांसखण्डमयैः पापैः कष्टं भो वञ्चिता वयम् ॥ ७१ ॥
आत्माभ्युदयमात्रे हि सर्व्वदा वयमुद्यताः ।
न चिन्तिता परज्यानिस्तेषान्तु मतिरीदृशी ॥ ७२ ॥
मण्डपो मन्त्रयोगोऽयं सम्भ्रान्तः स च पुरुषः ।
सर्व्वोऽयं दुर्नयस्तेषां कष्टं नास्माभिरीक्षितः ॥ ७३ ॥
कामतिर्विधि-वैलोम्ये कस्यचेद् भवितव्यताम् ।
तद्भूयो धैर्य्यमालम्ब्य कर्त्तव्यमिह चिन्त्यताम् ॥ ७४ ॥
इत्युदीर्य्य क्षणं ध्यायन् पुनरूचे सुरासुतः ।
निरुद्ध-निखिलोपायेऽप्यस्मिन् घत दशान्तरे ॥ ७५ ॥
विधेर्दुर्व्ववोधत्वाद् आशामात्रं मयोच्यते ।
एतदोदनसङ्घातं दीपमप्येकभाजने ॥ ७६ ॥
सङ्गृह्य धारयत्येको जीवितं यावदोदनम् ।
यदि निर्गमनोपायो लभ्यतेऽस्य तदन्तरे ॥ ७७ ॥
तदा निर्गत्य विद्वेषि-विध्वंसे यततामसौ ।
इत्येवं कथयित्वासौ मौर्य्ये धैर्य्यनिधौ स्थिते ॥ ७८ ॥
द्रष्टुश्च मरणं स्वानां कर्त्तुं भूयः प्रतिक्रियाः ।
चन्द्रमास्मानयाः सर्व्वं प्रत्यवोचन् न किञ्चन ॥ ७९ ॥

तदा पिता कनीयांसं सुतं साश्रमलोकयत्।
स चन्द्रगुप्तनामा तु बालको धीरबुद्धिवान्॥ ८०॥
पितुराज्ञामहत्वावदुद्दहामि न संशयः।
जीविष्यामि करिष्यामि निर्गतश्चेत् प्रतिक्रियाम्॥ ८१॥
इत्युक्ते मुदिताः सर्वेऽप्यन्वगच्छन्नमुं शिशुम्।
सहायविप्रयुक्तोऽपि जेष्यसि त्वं रिपूनिति॥ ८२॥
ओदनेन कृताशोऽसौ धृताशो रिपुनाशने।
उवास वासरैरल्पैः परेऽप्यासन् परासवः॥ ८३॥
श्रुत्वा च तदभोदत्तं श्वचा राजभयेन च।
तद्दुर्निभृतं सर्वं जज्ञुः केवलं नृपाः॥ ८४॥
अथ मासत्रयेऽतीते वङ्ग(ङ्ग)देशनराधिपः।
प्राहिणोत् पुरुषं कश्चित् सिंहगर्भस्य पिञ्जरम्॥ ८५॥
पुरुषोऽसौ नृपानत्वा सदसीदं न्यवेदयत्।
अभित्त्वा पञ्जरं सिंहो द्राव्यतां पञ्जराद्बहिः॥ ८६॥
इति श्रुत्वा च दृष्ट्वा च भूपाला मन्त्रिभिर्युताः।
विस्मयन्तोऽपि नोपायमपश्यन्मन्दचेतसः॥ ८७॥
तदा तु शिखिखो नाम सचिवो मौर्यपक्षगः।
गूढं खेदोऽवसन्नत समये किञ्चिदब्रवीत्॥ ८८॥
स हि मौर्यसुतश्चन्द्रगुप्तः शिल्पकलानिधिः।
आमोचयिष्यत्पञ्चास्य किन्तया गतचिन्तया॥ ८९॥
इति श्रुत्वैव भूपालास्तत्परीक्षण-तत्पराः।
सुरङ्गां खनयामासुः सभुजङ्गां गुहामिव॥ ९०॥
तच्चन्द्रगुप्तमेवाच दृष्ट्वा शिष्टमवस्थितम्।
हृष्टास्तेऽधिकृताः प्रोचुर्वत्स। निर्गम्यतामिति॥ ९१॥

स तु निर्गन्तु कामोऽपि तेषाविर्बन्धदर्शनात् ।
अनिच्छन्निव तानूचे शोकव्याकुलिताशयम् ॥ ८२ ॥
पितृभ्रातृ-विहीनस्य प्राणा मम दुरात्मनः ।
न गच्छन्ति गलन्त्यम्भे हन्त क्रन्तत क्रन्तत ॥ ८३ ॥
एवमादिवदन्तं तं रुदन्तं भूभुजः स्वयम् ।
आगत्य सान्त्वयामासुर्निस्त्रपाः कार्य्यगौरवात् ॥ ८४ ॥
अयि बालक ! मारोदीः पितरौ वयमेव ते ।
किञ्चित्तया पुरैवान्तःप्रेमवन्तो वयं त्वयि ॥ ८५ ॥
इत्यादिसान्त्वमानोऽपि नासौ निर्गतवान् यदा ।
तदा प्रत्यर्पयामासुः पितरं कोपमशेषतः ॥ ८६ ॥
ततः कष्टेण निर्यान्तं नीतिमन्तममुं नृपाः ।
आ (मा) नयित्वाय तं सिंहं शोकार्त्तञ्च न्यवेदयन् ॥ ८७ ॥
श्रुत्वा तचन्द्रगुप्तोऽपि दृष्ट्वा सिंहञ्च पञ्जरे ।
एवं स चिन्तयामास शिल्पशास्त्रविशारदः ॥ ८८ ॥
महाशरीर-सिंहोऽयं नैव पञ्जरजालकैः ।
शक्यो मोचयितुं नापि व्याजं पश्यामि पञ्जरे ॥ ८९ ॥
सिंहस्य तु प्रतीयन्ते चेष्टा मल्ल-कृता इव ।
वर्णरोमादिकञ्चापि शिल्पिकल्पितमद्भुतम् ॥ १०० ॥
द्राव्यतामिति वाक्येऽपि धावनं नात्र सम्भवेत् ।
तेन द्रावण-योग्योऽयमधूच्छिष्टमयो भवेत् ॥ १०१ ॥
इति निश्चित-चित्तोऽयं उच्चैरारोप्य पञ्जरम् ।
अग्नितप्तैरयोदण्डैः सिंहमद्रावयद्दृढ़ैः ॥ १०२ ॥
द्रवीभूतस्ततः सिंहं विलोक्य पुरवासिनः ।
अमात्या भूमिपालाय विस्मयं परमं ययुः ॥ १०३ ॥

वङ्गराजप्रयुक्तोऽसौ पुरुषोऽप्यति विस्मितः ।
प्रसंगमौर्य्यतनयं प्रययौ राजपूजित. ॥ १०४ ॥
अपरः सिंह एवासौ मौर्य्यनाम्ना समुत्थितः ।
किं किलानेन भावीति शङ्कितोऽभूत्सराक्षसः ॥ १०५ ॥
मौर्य्यस्य तनयानाञ्च संस्कारानौर्द्ध्वदैहिकान् ।
विधिवत्कारयामासुश्चन्द्रगुप्तेन पार्थिवाः ॥ १०६ ॥
चन्द्रगुप्तेन साध्यानि न्यूनमेतादृशानि नः ।
शत्रुशेषोऽपि संरक्ष्यस्तदसौ धीमताम्बरः ॥ १०७ ॥
अश्वादिषु नियुक्तोऽसौ तान् कथञ्चिद्विनाशयेत् ।
क्वचिदप्यनियोगे तु पृथगभाव-मतिर्भवेत् ॥ १०८ ॥
तदग्रभोजने सोऽयं ब्राह्मणानां परिग्रहे ।
कल्पतामिति सम्मन्त्य तथा चक्रुर्नृपालकाः ॥ १०९ ॥
सोऽपि स-पितृसौदर्य्य विनाश कलुषीकृतः ।
निगूढवैरस्तेजस्वी स्वतेजोभिरदृश्यत ॥ ११० ॥
तथा स्थितोऽपि मतिमानादाय नृपशासनम् ।
अग्रभोजनविप्रेन्द्र । कथमे तत्परोऽभवेत् ॥ १११ ॥

स पुनरथ सहायप्राप्तये जागरूकः,
प्रबलमिति च जानन् धीबलं सैन्यवर्य्यात् ।
भुविनयबलदृप्तानन्वयिष्येद् द्विजेन्द्रान्,
न खलु बुध जिघृक्षा तस्य शङ्कास्पदं स्यात् ॥ ११२ ॥
सोऽयं पुरी परिसरे विचरन् कदाचित्,
उत्प्रेक्ष्य तेजसमुदैक्षत भूसुरेन्द्रम् ।
मार्गस्थित कमपि मुञ्जमुदस्यदग्धा,
तद्भस्मरोप कपिशेक्षण मापिबन्तम् ॥ ११३ ॥

दृष्ट्वा तं तेजसांराशिं तस्य कर्म्म च तादृशम्।
प्रपच्छ चन्द्रगुप्तोऽसौ दूरतः प्रणमन्मुहुः ॥ ११४ ॥
प्रसीद हे महाभाग! किमिदं कुरुते भवान्।
इति पृष्टः स विप्रोऽपि साटोपं स्मितमूचिवान् ॥ ११५ ॥
चरतः पादलग्नो मे पतनायाभवद्‌ यतः।
अतो मुञ्जं समुन्मूल्य दग्ध्वा भस्म पिवाम्यहम् ॥ ११६ ॥
ततोऽसौ पृष्टवान् किन्ते धीमन् पीतेन भस्मना।
विप्रोऽपि प्राह कोपाग्निरन्यथा मान्द्यमेति ॥ ११७ ॥
एवञ्चेदपकुर्व्वन्तु प्रबलेषु नृपादिषु।
किङ्करिष्यसि धीरात्मन्! कौतुकात् पृच्छ्यते मया ॥११८॥
इति पृष्टो द्विजेन्द्रोऽपि सहासोद्गतमूचिवान्।
अयि बालक! नोवेत्सि मामकं मति-वैभवम् ॥ ११९ ॥

> अश्वा नागा, स्यन्दनानाञ्च सङ्घाः,
> मन्त्राः शूरा दैवतञ्चानुकूलम्।
> एतान्याहुः साधनानि स्म राज्ञाम्,
> तेभ्योऽपीयं बुद्धिरुत्कृष्यते मे ॥ १२० ॥

इत्यमाकर्ण्य हृष्टात्मा पादमूले पपात सः।
को भवानप्रमेयात्मवनु गृह्णीष्व मामिति ॥ १२१ ॥
विप्रोऽपि सादरं प्राह सोऽहन्नीतिबलोज्ज्वलः।
विष्णुगुप्तश्च चाणक्यः कौटिल्यश्चास्मि नामतः ॥ १२२ ॥
अधुना पीतनिःशेष-शास्त्राम्भोधिः प्रसन्नधीः।
नन्दाग्रभोजनं श्रुत्वा सोत्सुकस्मि समागतः ॥ १२३ ॥
तद्ब्रूहि भद्र! भूपालैर्नियुक्तो विप्रसंग्रहे।
श्रूयते वृषलः कश्चित् सोऽधुना कुत्र वर्त्तते ? ॥ १२४ ॥

इति पृष्टो वदन् मौर्य्यः स एव वृषलोऽस्म्यहम् ।
तत् (म) प्रविश्य त्वया धीमन् सनाथी क्रियतामिदम् ॥१२५॥
भवदागमनाकाङ्क्षे नन्दवंशोऽद्यवर्द्धितः ।
इत्युक्तः सोऽथ चाणक्यो लज्जामत्यरमब्रवीत् ॥ १२६ ॥
विप्रजातिस्वभावान्मे हन्त चापल्यमागतम् ।
वृषलेति यदा च्छिप्तो राज्ञः पौत्रः स्वयं भवान् ॥ १२७ ॥
तस्मै लज्जापनोदाय वरमिष्टं ददामि ते ।
त्वयि स्निह्यति मे चेतः प्रश्रयेण तवामुना ॥ १२८ ॥
इत्युक्तश्चन्द्रगुप्तोऽपि प्रणम्यैनमवोचत ।
महात्मन् ! वर यथार्थं वृषलेति त्वयेरितः ॥ १२९ ॥
एवमेवास्मि वक्तव्यो नित्यमेव वरो मम ।
अथवा करुणावेशाद् वदन् (वर) यदपि दीयते ॥ १३० ॥
प्रयाणे मत्कुटीरस्य पावनो कर्त्तुमर्हसि ।
एवमुक्ते तथैवेति वादिनं मोदशालिनम् ।
सम्मानयन् पुरोद्देशं समानयदमुं बुधम् ॥ १३१ ॥
प्रसङ्गात् पितृसोदर्य्य-प्रणाशादिकमात्मनः ।
उदन्तश्रावयन्नेव तदन्तः करुणा व्यधात् ॥ १३२ ॥
स्नपनादि स्वकर्त्तव्यं सकलं सन्विधाय सः ।
भुक्ति-शालाम्प्रदर्श्यास्मै मौर्य्यः स्वभवनं ययौ ॥ १३३ ॥
गच्छंश्चिन्तयच्चासौ दिष्ट्या लब्धा मनोरथाः ।
सर्व्वथैनं समालम्ब्य कुर्व्वेऽहं वैरनिष्क्रियम् ॥ १३४ ॥
अपि नाम बुधेन्द्रोऽद्य नृपपार्श्वे पूज्यते ।
चलितास्ते ततो राज्यात् फलिता मन्मनोरथाः ।
इत्यादिचिन्तयन्नेव तस्थौ धन्यः स्वमन्दिरे ॥ १३५ ॥

चाणक्योऽपि समाविश्य भुक्तिशालां व्यलोकयत्।
स्वर्णभाजनजुष्टानि भुक्त्यर्थं मण्डलान्यसौ॥ १३६॥
प्राङ्मुखानि नवापश्यदेकं प्रत्यङ्मुखस्तथा।
राजतैर्भाजनैर्युष्टं किञ्चिन्न्यूनोपचारकम्॥ १३७॥
मण्डलानां सहस्रञ्च दृष्ट्वा तत्रैव पृष्टवान्।
कोऽत्र भोः! कथ्यतामेतत् कस्य किन्नाम भोजनम्॥ १३८॥
इति पृष्टगिरा पृष्टाः प्रत्यूचुरधिकारिणः॥ १३९॥

स्थानान्यमूनि नवनन्द-नराधिपानां,-
मग्रासनन्त्वपरमुत्तमविप्रयोग्यम्।
अन्यत् सहस्रमिदमन्य महीसुराणाम्,
तद्विकमर्हसि भवान् अधुनाधिरोढुम्॥ १४०॥

इति श्रुत्वैव चाणक्यो विप्राणामुत्तमोऽस्म्यहम्।
इत्यग्रासनमारुह्य मौनमस्मिन्नुपाविशत्॥ १४१॥
अथ प्रविष्टा राजानो दृष्ट्वाऽऽरूढवयसं द्विजम्।
अग्रासनमुपारूढमब्रुवन् काल चोदिताः॥ १४२॥
कोऽसौ वटुरनारूढश्मश्रुरग्रासनं गतः।
निरस्यतां मर्कटोऽयमिति श्रुत्वैवमब्रवीत्॥ १४३॥
मर्कटो वा वराहो वा विद्यते यदि सक्षमः।
अहमेवावरोक्ष्यामि किं वोढुर्वादघोषणैः॥ १४४॥
सोऽहमस्मि चतुर्वेद-वेदी षड्दर्शनी पटुः।
परीक्ष्यतेत् परीचध्वमवरोक्ष्यामि साध्वसात्॥ १४५॥
इति रोषं नियम्यैव न्यायवादिनमप्यमुम्।
बलान्निष्कासयामासुर्गर्वितानन्दभूभृतः॥ १४६॥

केशे निष्कृष्य स बलान्नरपालभृत्यैः,
त्यक्तो बहिर्झटिति मुक्त-शिखोत्तरीयः ।
अग्र्यासने च निहितः स्थविरो द्विजोऽन्यः,
चुक्रोध तावदतुलं स हि विष्णु-गुप्तः ॥ १४७ ॥

पीत क्षुधा नाशितमुग्ररागे-,
स्तस्यावमानः कथमेव सह्यः ।
अपाररोषज्वलितस्तदानीं,
स घोरघोरामकरोत्प्रतिज्ञाम् ॥ १४८ ॥

शृणुत वचनमेतत् क्षत्रियाः क्षुद्रसत्त्वाः !,
यदहमखिलमुख्यो न्यक्कृतः पूजितोऽन्यः ।
तदहमखिलनन्दान् पातयित्वाथ राज्यात्,
वृषलमपरमत्र न्यस्य बध्नामि चूडाम् ॥ १४९ ॥

इति घोरं प्रतिज्ञाय प्रस्थितेऽस्मिन् बुधेश्वरे ।
धिक् कष्टमिति शोचन्तस्तूष्णीमासन् महाजनाः ॥ १५० ॥
शृणुतेदं क्षुधार्त्तस्य विप्रस्योन्मादभाषितम् ।
इत्यन्योन्यं हसन्तस्ते भुञ्जते स्म नृपालकाः ॥ १५१ ॥
विष्णुगुप्तोऽपि मौर्यस्य गृहं गत्वा तमूचिवान् ।
नन्दराज्येऽधराजात्वं मन्त्वाहं चावगम्यताम् ॥ १५२ ॥
इत्युक्ते किमिदं धीमन् इति मौर्येण पृच्छति ।
राजावज्ञां प्रतिज्ञाञ्च सर्व्वमस्मैन्यवेदयत् ॥ १५३ ॥
मौर्य्य प्रार्थितमेवार्थं श्रुत्वासन् पूर्णसम्मदः ।
मत्वा शिष्योऽहमस्मीति गुरुत्वेनावृणोन्मुदम् ॥ १५४ ॥
स मौर्य्यं प्रतिवञ्चार्थ्यं चिरमुक्त्वा प्रतस्थिवान् ।
न चास्य मौर्य्यं सौहार्दं सम्वादञ्चाविदन् जनाः ॥ १५५ ॥

सोऽयं स्व भवनं प्राप्य विप्रं सब्रह्मचारिणम् ।
इन्दुशर्म्माणमाहूय स्वावमानं न्यवेदयत् ॥ १५६ ॥
ज्योतिषे मन्त्रवादे च नयेचौशनसे पटुः ।
स विप्रः सर्व्वकार्य्याणि सम्मन्त्राय प्रतस्थिवान् ॥ १५७ ॥
नन्दान्तं क्षपणायाऽसौ जगाम क्षपणाकृतिम् (:) ।
निस्पृहः किन्न भोगेषु प्राणधारणकाङ्क्षते ॥ १५८ ॥
समवर्द्धन् मुनेः पादौ श्रावयत्याशयाञ्जनान् ।
पिच्छनाञ्छितहस्तासौ नन्दराज्ये चचार सः ॥ १५९ ॥

अथ तु वृषनिरास तत् प्रतिज्ञाय शृण्वन्,
अधिकतर विषादी राक्षसो दीर्घं दर्शी ।
ध्रुवमयमभिचार प्रारभेतेति चक्रे,
तदुपशमनचिन्ताशान्यमार्ग विवेद ॥ १६० ॥

सोऽशृणोत्क्षपणकं कश्चिद्गरत्नमान्त्रिकोत्तमम् ।
तमानीयच पप्रच्छ को भवानिति सादरम् ॥ १६१ ॥
गणिते मन्त्रवादे च निपुणः क्षपणोऽस्म्यऽहम् ।
जीवसिद्धिरिति ख्यातो निस्पृहश्चेत्युवाच सः ॥ १६२ ॥
ब्राह्मणाः क्षपण(का)श्चैव नित्य वैर समन्विताः ।
अतो विप्रकृता बाधामनेन शमयाम्यहम् ॥ १६३ ॥
इति निश्चित्य विश्वासाद्विप्रकोप-कथामिमाम् ।
अब्रवीद्राक्षसस्तस्मै सोऽवदच्चिन्तयन्निव ॥ १६४ ॥
अयि श्रावक । माभैषीः ब्राह्मणो नाम किंन्विदम् ।
नैषा सैन्य न दोर्वीर्य्यं केवल भीरवोद्विते ॥ १६५ ॥
किन्त्वभिचार चातुर्य्यं केषाञ्चिद्विद्यते किल ।
तत्राहं प्रतिकर्त्तास्मि तस्य को मत्समो भुवि ॥ १६६ ॥

इति तस्मै प्रतिश्रुत्य राक्षसेन प्रपूजितः ।
निवर्त्तयामास राज्ञामेष महाज्वरम् ॥ १६७ ॥
चाणक्यस्याभिचारोऽयमिति विश्वास्य लक्षणैः ।
तज्ज्वरं शमयामास विप्रछद्मगणमात्रतः ॥ १६८ ॥
ईदृशानि भवन्त्येव ब्राह्मणेभ्य इतीरयन् ।
भूमिपैस्त्याजयामास क्षेमदं विप्रभोजनम् ॥ १६९ ॥
ततो दिनेष्वतीतेषु राज्ञा सम्मोहदायिनम् ।
उन्माद प्रहमुत्पाद्य स्वयश्चांशोप्रमत् पुनः ॥ १७० ॥
तत् प्रीत्या राजभिर्दत्त हिरण्यंशतसहस्रकम् ।
पाषाणवदुपेक्षिष्ट विरक्तः किल सर्व्वतः ॥ १७१ ॥
ततः प्रभृति राजानो राक्षसश्चापि विस्मिताः ।
तस्मिन् प्ररूढविस्रम्भा बभुवुर्मन्दचेतसः ॥ १७२ ॥
मौर्य्यस्यास्य पुरीवासे दोषान् पश्यामि लक्षणैः ।
इत्युक्त्वा चन्द्रगुप्तं स नगराद्विरवासयत् ॥ १७३ ॥
वर्द्धमानाह्वये ग्रामे नगराद्दशयोजने ।
स्थापयामास तं धीमान् तस्य स्वातन्त्र्य सिद्धये ॥ १७४ ॥
भूयः शावरनाथस्यवानुमत्या वने द्विजः ।
चाभिचार करोतीति लक्षणैश्चावानसौ ॥ १७५ ॥
भूपालैर्जीविकां हृत्वा स चाकाण्डे प्रकोपितः ।
मौर्य्यस्तु पैतृकैरर्थैर्निगूढ जीवितं ददौ ॥ १७६ ॥
एवं मौर्य्यवशे जातो बलीयान् शबराधिपः ।
तथान्येऽपि पिष्ट स्निग्धा गूढस्नेन प्रसादिताः ॥ १७७ ॥
चाणक्यस्त्विन्द्रशर्माण विसृज्यानन्तरं ततः ।
जगाम पाटलिपुत्रादुदीच्यां शतयोजने ॥ ७८ ॥

तत्र पर्व्वतकं नाम म्लेच्छराजमसेवत।
धीवलैस्तस्य विश्वास्य कार्य्यजातान्यवर्णयत्॥ १७८॥
नन्दस्यापति धिक्क्रिया कृतवता तन्नन्दराज्यप्रिया,
मौर्य्याख्याय तदा प्रतिश्रुतमभूदास्ते च निःसाधनः।
तत् सम्पूर्णबलस्य ते सचिवतां सम्प्राप्य हत्वा नृपान्,
दास्यामि स्फुटमर्द्धराज्यं मयि ते मैत्रेण चेदर्प्यसे॥ १८०॥
इत्युक्तः पर्व्वतेन्द्रोऽसौ भ्राता वैरोधकस्तथा।
पुत्रो मलयकेतुश्च सहामी: समचिन्तयत्॥ १८१॥
नीतिशास्त्रप्रवीणोऽयञ्चाणक्यो विपुलमर्म्मवित्।
तेनार्द्धं नन्दराजस्य सर्व्वथा लभ्यमेव नः॥ १८२॥
किञ्च मौर्य्यस्य तुच्छत्वात् सर्व्वं वा लभ्यते क्रमात्।
इति सम्मन्त्र मन्त्रिभिः चक्रुश्चाणक्यमादरात्॥ १८३॥
सोऽपि म्लेच्छपतीनन्यान् पर्व्वतेन्द्रवशेऽकरोत्।
तत्तत् प्रयोजनन्तेभ्यः प्रतिज्ञाय महत्तरम्॥ १८४॥
नन्दराज्याभियानस्य गूहनाय च नीतिमान्।
दूरगेनान्यभूपेन तस्य वैरमघोषयत्॥ १८५॥
ततः स सुतसोदर्य्यौ राशीकृत्य महाचमूम्।
दक्षिणो दक्षिणामाशां प्रतस्थे पर्व्वतेश्वरः॥ १८६॥
सनन्दं प्रति यातीति न ज्ञातं तद्बलैरपि।
तादृशन्तत् कथं विद्युर्दूरगा राक्षसादयः॥ १८७॥
*तस्य चारस्य चारेभ्यो विज्ञातन् चाणेश्वरः।*
नन्दसेनापतीन् प्राप्य रहस्येकैक मूचिवान्॥ १८८॥
आषाढ़कृष्णपक्षादौ भौमवारे रिपुः पुरीम्।
निरोत्स्यति तदानीञ्च कालदोषो महांस्तव॥ १८९॥

अतो न तद्दिने योद्धुं प्रस्थातव्यं सखे ! त्वया।
प्रस्थितश्चेदसन्दिग्धं मृत्युरेव भविष्यति ॥ १८० ॥
तत् स्नेहादेव वृत्तान्तो नान्यस्मिन् कथ्यते मया।
हस्तेऽस्मिन् पूर्व्वमुद्घुष्टे नोपायः स्यादुदासीतुम् ॥ १८१ ॥
इत्येवमेव प्रत्येकं गूढ़ेनैन प्रबोधिताः।
बहवोऽपि च भूपाला युद्धेरुद्योगमाः कृताः ॥ १८२ ॥
अथ पृथुबलशाली चन्द्रगुप्ताधिवासम्,
निभृततरमयासीत् पर्व्वतेन्द्रो निशीथे।
स तु चणकसुतोक्त्या पित्रकौमार्द-दायी,
व्यतनुत किल मैत्रीं म्लेच्छराजेन मौर्य्यः ॥ १८३ ॥
प्रत्यूष एव च महाष्टतनानुयातौ,
चाणक्यपर्व्वतनृपौ समभेकभागे।
मौर्य्यकिरातपति-सैन्य-युतोऽन्यभागे,
रुद्धाखिलाशमथ पुष्पपुरीमरुन्धाम् ॥ १८४ ॥
तावदाशु च भूपाला नाक्रयन्ति स्म भूमिपाः।
तेऽपि तैस्तैश्छलोपायैः प्रायेनासन् विलम्बिताः ॥ १८५ ॥
मौर्य्यस्य दृष्ट्वा द्युति वीर्य्यतया सशङ्कः,
तं योद्धुमापबलवानथ राक्षसोऽसौ।
तत् कालसम्मिलित-नातिसमग्रसैन्या,
भूपाश्च पर्व्वतकसैन्यमुखे निरियुः ॥ १८६ ॥
मौर्य्यस्तु युद्धसन्नद्धं वीक्ष्य राक्षसमागतम्।
सद्यः समेत्य तत्पादौ ननामैवमुवाच ह ॥ १८७ ॥
राजपुत्र ! तवास्माकं राज्यांशोऽस्ति कियानपि।
तस्यार्द्धं दापयत्वार्य्य शमयिष्याम्यहं रणम् ॥ १८८ ॥

इत्युक्ते पाप! युद्धस्व जानामि तव दुर्नयम्।
इत्यूचे राक्षसो रोषात् प्राह पूर्वोक्तमेव सः॥ १९८॥
दीयतां न्याय्यमित्येको युध्यतामिति चापरः।
इत्थं शुष्कविवादेन तस्थतुस्तौ महारथौ॥ २००॥
तदनुपर्व्वतनन्द बलौघयोः सुतुमुलो ववृधे समरोत्सवः।
झटिति खण्डितमुण्डपरम्परा, चटचटाकृतिघोरभयङ्करम्॥२०१॥
तत्क्षणं क्षीयमाणेषु निजसैन्येषु भूमिपाः।
मानिनो निर्विचाराश्च पर्व्वतेन्द्रबलेऽपतन्॥ २०२॥
भूपास्ते युद्धसम्बद्धा सदाचाणक्य-शासनात्।
म्लेच्छवीरैः समं सर्व्वे खण्डिता रणपण्डितैः॥ २०३॥
नवदेवास्तदानीन्ते हन्त पञ्चत्वमागताः।
भूयोऽपि नवदेवत्वं प्रापुस्त्रिदिवमन्दिरे॥ २०४॥
श्रुत्वा ततः कलकलं सुधिराक्षसोऽपि,
घोरां विमृश्य विपदं रणभूमिमाप।
दृष्ट्वा च तत्र पतितान्नृपतीनकाण्डे,
हा कष्टमित्यतिशुचा नगरीं विवेश॥ २०५॥
इत्थं हतेषु नन्देषु राक्षसे खेदकुण्ठिते।
सर्व्वार्थसिद्धिना सार्द्धमगरान्तर्गते सति॥ २०६॥
चाणक्यसैन्यचक्रेण भूयोऽपि रुरुधे पुरीम्।
राक्षसो ह्रासमानोऽपि स्वल्प सैन्यो न निर्ययौ॥ २०७॥
चिरन्निरोधदीनाश्च पौराश्चाणक्यमूचिरे।
अराजकं पुरं हा हा भवतामद्यतामिति॥ २०८॥
चाणक्योऽप्यूचिवान् घोरं विपुरस्तर्गतोऽस्ति यः।
सर्व्वार्थसिद्धिनामा स तस्मै ग्रदिह गर्वति॥ २०९॥

युध्यता स च्छि शत्रुसैन्यैर्विदिगतु कानमम् ।
तस्मिन् गते हृते वापि पाल्यामपुरीमिति ॥ २१० ॥
तत् पौरेभ्यः समाकर्ण्य राक्षसार्थे विधार्य सः ।
पुनरभ्युदयाकाङ्क्षी नृपो यातस्तपोवनम् ॥ २११ ॥
चाणक्यो जयघोषाय पौरान् प्रेरयति स्म स. ।
तेऽपि राक्षसमन्त्रस्ता. कथञ्चिच्चक्रिरेऽखिलम् ॥ २१२ ॥
मौर्यपर्वतकौ सोऽथ नवे गेहे न्यवेशयत् ।
न सदा. पुरमानिन्ये पर्वत प्रत्यविश्वसन् ॥ २१३ ॥
स पुनश्चिन्तयामास क्षुद्रोऽयं म्लेच्छनायकः ।
दुह्येत् कालेन मौर्याय तर्हि वध्यो भवेदसौ ॥ २१४ ॥
राक्षसस्तु न हन्तव्यो दुर्लभा गुणिणो नराः ।
किन्त्वासुश्चन्द्रगुप्तस्य करिष्ये मन्त्रिणं शनैः ॥ २१५ ॥
तत्तु नन्दान्वयायेऽपि यत्र क्वचनजीवति ।
न शक्यमिति सर्व्वार्थसिद्धिर्वध्यो भवेत् क्रमात् ॥ २१६ ॥
स तु राक्षसमालम्ब्य जिघांसति यदैव न. ।
तदैव तद्वध कुर्म्मस्तथाप्येष न शाम्यति ॥ २१७ ॥
भक्ति विक्रमदुर्द्दान्त समाश्रित्यापरं नृपम् ।
विरुन्धीतैव भूयोऽपि वयं वारयितास्महे ॥ २१८ ॥
निरुद्ध सर्व्वतीर्थेस्तु कालात् सन्धास्यते स्वयम् ।
इति निश्चित्य मौर्येन्द्रो सावधानं स तस्थिवान् ॥ २१९ ॥
राक्षसस्तेन दुःखेन वर्द्धयिष्यन् पुन. कुलम् ।
प्राप्यगूढा सुरङ्गान्ता मन्त्रयामास बन्धुभि ॥ २२० ॥
सञ्चिचिन्त्य पुन' स्वामि विश्लेषक्रथसैनिकः ।
वञ्चना वधमेवास्य मेने मौर्यस्य वैरवान् ॥ २२१ ॥

गूढे तपोवने भूपं गुप्तमादाय राक्षसः ।
मौर्य्यमासाद्यमन्त्रित्वमर्थयामास दीनवत् ॥ २२२ ॥
नन्दस्य तत्सुतानाञ्च मन्युं तत्कुलोद्भवे ।
त्वय्येव वत्स वत्स्यामि पर्व्वते नान्यवंशजे ॥ २२३ ॥
इत्येवं प्रार्थितस्तेन बुध्वापि कपटोद्यमम् ।
मौर्य्यश्चाणक्य-विश्वासात् स्वीचक्रे कूटमन्त्रिणम् ॥ २२४ ॥
तथास्थितो मनस्यस्य क्षितीशस्य मतेन सः ।
वहन् मौर्य्यवधोपायान् गूढमाधत्त राक्षसः ॥ २२५ ॥
शिल्पिहस्तिप-वैद्याद्याः शस्त्रदा गरदा अपि ।
तत्प्रयुक्ताश्चिरन्तस्मिन् मौर्य्ये रन्ध्रं न लेभिरे ॥ २२६ ॥
तदा सर्व्वार्थसिद्धिस्तु मुनिवेशधरैश्चरैः ।
मौर्य्याय प्रेषयामास विषाक्तं वदरीफलम् ॥ २२७ ॥
चाणक्यचारात् तज्ज्ञात्वा तेषु सुप्तेषु वर्त्मनि ।
अन्यत् फलं निधायेदं नन्दभोज्येषु चिक्षिपुः ॥ २२८ ॥
मौर्य्यस्तु मुनिभिर्दत्तं फलं भुक्त्वा सुखं स्थितः ।
सर्व्वार्थसिद्धिः स्वोत्सृष्टं स्वयं भुक्त्वा मृतोऽभवत् ॥ २२९ ॥
स च तस्य वधोदन्तो मन्त्रिभेदस्य शङ्कया ।
गोपितो राक्षसेनापि चिरम्भुवि न पप्रथे ॥ २३० ॥
तस्मिन् हते गताशोऽपि राक्षसो रुषरोषणात् ।
सर्व्वथा शत्रुविध्वंसे भूयो बद्धोद्यमोऽभवत् ॥ २३१ ॥
स मौर्य्यं सेवमानोऽपि गूढं पर्व्वतकं भजत् ।
तन्मतेन पुनश्चक्रे मौर्य्यस्यैव वधोद्यमम् ॥ २३२ ॥
अहो पूर्व्वप्ररूढस्य वैरस्य दुरपोहता ।
यद्रिपुत्वे मतानेऽपि पर्व्वतोऽस्य रिपोऽभवत् ॥ २३३ ॥

कथञ्चिदपि तन्मौर्य्यं हत्वा राज्यं ददामि ते।
इति सम्राट्-पुत्राय पर्व्वतायाह राक्षसः ॥ २३४ ॥
ततश्च क्षपणं प्राह हता हि स्वामिनस्तव।
तदन्त-निधनोपायो ह्यस्त चिन्त्यस्त्वया सखे! ॥ २३५ ॥
इत्युक्तोऽसौ तथेत्युक्ता तच्चाणक्याय बोधयन्।
अभिचारक्रियां घोरामारेभे तपसांनिधिः ॥ २३६ ॥
हूयमानात्ततो वक्रेरग्निशुद्धेव मैथिली।
पूर्णचन्द्रमुखी काचिदायताक्षी समुत्थिता ॥ २३७ ॥
अङ्गनानां परिष्वङ्गो मोहनायैव केवलम्।
अनया तु परिष्वक्तो मृतिमप्युप यास्यति ॥ २३८ ॥
एकस्मिन्निहते चेयमाकस्मिकविलासिनी।
अदृश्या भवतीत्येवमुपदिश्य ददौ सताम् ॥ २३९ ॥
राक्षसस्त्वतिगूढ़स्तत् पर्व्वतेन्द्रेऽपि गोपयन्।
गते कतिपये काले चाणक्याय न्यवेदयत् ॥ २४० ॥
अस्ति काचनतन्वङ्गी चन्द्रगुप्तोचिता मयि।
अनया यौवनन्तस्य सफलो क्रियतामिति ॥ २४१ ॥
अजानन्निव चाणक्यः प्रशंसन्नुचितज्ञताम्।
सेयमानीयतां क्षिप्रमित्यानाययति स्म ताम् ॥ २४२ ॥
आनीयतां मनोज्ञाङ्गीं दृष्ट्वा हर्षाकुले जने।
शय्यागृह-निवेशस्य समयेऽपि समागते।
सम्भ्रान्त इति चाणक्यः सदसि प्राह राक्षसम्।
पर्व्वतो नः परं मित्रं तस्येयं कल्प्यतामिति ॥ २४३ ॥

स प्रासकाले जनता समक्षम्,
तथार्थ्यमानं यणकाक्षजेन।

तस्योत्तरस्यान्यदवीक्ष्यमाण-
स्तथेति मन्त्रिप्रवरोऽनुमेने ॥ २४४ ॥
पर्व्वतायैतदाख्यातुं निरुद्धावसरस्तदा ।
राक्षसो दूरतस्तस्थौ स तु गत्वान्ददौ मुदा ॥ २४५ ॥
चन्द्रगुप्तजिघांसुः स पापात्मा पर्व्वतेश्वरः ।
रात्रौ तया परिष्वक्तो विह्वतिम्प्रापदन्तिमाम् ॥ २४६ ॥
अथ राजवधत्रस्तो रजन्यामेव राक्षसः ।
सख्युश्चन्दनदासस्य गृहे गृहजनं न्यधात् ॥ २४७ ॥
चन्द्रगुप्तवधादिष्ट-वैद्यादिपरिपालने ।
धत्ते शकटदासाख्यं कायस्थं धनसञ्चये ॥ २४८ ॥
राज्ञावेवाखिलान् भृत्यां स्तत्तत् कार्य्यं नियम्य सः ।
गूढ़ं पुष्पपुरात्तस्मान्निर्जगाम सुदुर्ज्जयः ॥ २४९ ॥
अन्तःक्षोभकरे तस्मिन् स्थिते राज्यं दुरानमम् ।
इति तन्निर्गमः प्रायः चाणक्यस्यापि सम्मतः ॥ २५० ॥
(प्रातः पर्व्वतकन्दृष्ट्वा) हा हेतिवादिनः पौरायाणक्यायन्यवेदयन् ।
दर्शितक्रोधयोकोऽथ चाणक्योऽप्यादिशत् भटान् ॥ २५१ ॥
राजघाती दुरात्मा स राक्षसो हन्यतामिति ॥ २५२ ॥
भटेषु राक्षसागारं शून्यं दृष्ट्वा निवेदिते ।
राक्षसः पर्व्वतेन्द्रस्य हन्तेत्यजनि घोषणा ॥ २५३ ॥
यौ पुनः पर्व्वतेशस्य भ्रातृपुत्राववस्थितौ ।
राक्षसेन समं पूर्व्वंचन्द्रगुप्तवधोद्यतौ ।
तौ बधार्हौ विदित्वाऽपि चाणक्यः समचिन्तयत् ॥ २५४ ॥
एको मोचयितव्योऽत्र द्वयोरपि वधे पुनः ।
पर्व्वतोविहतोऽस्माभिरित्येव प्रत्ययो भवेत् ॥ २५५ ॥

वैरोधकस्त्वतिद्वेषी ह्यन्यतोऽन्यस्तु मुच्यते।
इति निश्चित्य च प्राह मन्त्रिणं भागुरायणम्॥ २५६॥
त्वं हि प्रागेव मौर्य्येषु स्नेहवान् मयि चाधुना।
पर्व्वतेन्द्रादिभिः प्रसौ गूढमैत्रीं मदाज्ञया॥ २५७॥
सत्वं मलयकेतुं तम्बोधयन् मत्कृतं भयम्।
अपवाहय तस्यैवं हिताख्यानात् प्रियो भव॥ २५८॥
इत्युक्तः सोऽपि गत्वा तमग्रतः सौम्यमब्रवीत्।
कष्टं मलयकेतो ते चाणक्येन हतः पिता॥ २५९॥
तस्मा धोषय रोषेण त्वामप्येष हनिष्यति।
ततोऽद्य स्वपुरं प्राप्य कर्त्तव्यं चिन्त्यतां पुनः॥ २६०॥
इत्युक्तस्त्वक्षत प्रेत-कृत्यो म्लेच्छसुतो ययौ।
अयं मदनुमत्यैव गतः पर्व्वतकात्मजः।
काले चायास्यतीत्येव कौटिल्यस्य तदा वचः॥ २६१॥
तदा पर्व्वतहन्तारं ये चाणक्यं शशंसिरे।
त इत्थं मन्त्रयामासुरलं नः क्षुद्रयाज्ञया॥ २६२॥
पर्व्वतो न हतोऽनेन स चेदद्यकथं पुनः।
मलुशैप तया बध्यं तत्पुत्र मोचयेदिति॥ २६३॥
राक्षसस्तु पुरात्तस्मान्निर्गत्य शतयोजने।
क्व एवावसन्मौर्य्यैः बधोपायं विचिन्तयन्॥ २६४॥
ततो मलयकेतुस्तमपक्रान्तं निशम्य सः।
सोऽहं मौर्य्यपशुं हत्वा कृत्स्नं राज्यन्ददामि ते।
व्यूहयन्तौ सैन्यचक्राणि शत्रुभेदं करोम्यहम्॥ २६५॥
इत्येवं राक्षसेनोक्तो गर्व्वितः पर्व्वतात्मजः।
तस्मै मन्त्रिपदन्दत्वा प्रतिजज्ञे किल स्वयम्॥ २६६॥

अहत्वा पितृहन्तारं न दास्यामि जलाञ्जलिम् ।
इति स्वेच्छावशे स्थातुं म्लेच्छानप्यादिदेश सः ॥ २६७ ॥
राक्षसस्त्वरि भेदाय कृत्वा पुष्पपुरे चरान् ।
रञ्जयन् म्लेच्छसैन्यानि तस्थौ रन्ध्रेच्छया चिरम् ॥ २६८ ॥
कौटिल्यस्तु चरैर्दृष्ट्वा म्लेच्छराक्षससङ्गमम् ।
असम्भ्रान्तश्चरान् चक्रे स्वपक्ष-परपक्षयोः ॥ २६९ ॥
स कदाचित्तु मौर्य्यस्य पुरप्राप्तिमघोषयत् ।
पुरसंस्कारणादिष्टाः शिल्पिनस्तमवेदयन् ॥ २७० ॥
तोरणाद्यैर्बहिर्द्वारं संस्कृतं दारुवर्म्मणा ।
वयञ्चाभ्यन्तरं कुर्म्म इति श्रुत्वैव सोऽस्मरत् ॥ २७१ ॥
अनादिष्टकृतन्नूनं तोरणं मारणायनम् ।
शिल्पी च राक्षसस्येष्टो नत् कुर्य्यामहमन्यथा ॥ २७२ ॥
इति निश्चितसम्प्राप्ते मुहूर्त्तमानयन्निव ।
वैरोधकाय राज्यार्द्धं दत्त्वा प्रावेशयत् पुरम् ॥ २७३ ॥
कञ्चुकाकल्पसंच्छिन्नं मौर्य्यस्येव च हस्तिनम् ।
आरूढं निशि यान्तन्तं मौर्य्यमेवाविदन् जनाः ॥ २७४ ॥
गोपुरान्तर्विशन्तं तं स्वल्पसैन्य सहस्तिपः ।
राक्षसाज्ञाकरो मौर्य्य बुद्ध्या हन्तुं प्रचक्रमे ॥ २७५ ॥
तदैव दारुवर्म्मापि सुमुचे यन्त्रतोरणम् ।
भ्रष्टलक्षं पतन् सोऽपि हस्तिपस्तमचूर्णयत् ॥ २७६ ॥
विफलश्रम एष दारुवर्म्मा,प्यतिमानी करगामिनायुधेन ।
करिणीगतमेत्यभूपतिं तं, न्यवधीत् प्राग्घतश्च तत् पुरोगैः ॥२७७
अथाजहारमौर्य्याय वैद्यः स विषमौषधम् ।
तत् बुद्ध्वापाययामास तमेव चाणकात्मजः ॥ १७८ ॥

शयनाधिकृतश्चान्यो राक्षसात्तमहाधनः ।
अपूर्व्वेबधहृष्टश्चैव दृष्ट्वा जात इतो भवत् ॥ २७८ ॥
शयितस्य बधार्थञ्च गृहगर्भे स्थितासराः ।
विधाय सङ्कटं दृष्टं चाणक्य केन वक्ष्यते ॥ २८० ॥
इत्थं स हृदलं रक्षन् चक्रोपोपायसागरः ।
अञ्जसा रञ्जयामास नन्दराज्यं किलक्रमात् ॥ २८१ ॥
प्रधानानाञ्च केषाञ्चित् कार्य्याण्युत्पाद्य कैतवात् ।
कारयित्वाधिकं राज्यं चक्रेऽसौ स्थिरसौहृदम् ॥ २८२ ॥
ततः प्रधानपुरुषान्मन्त्रिणोऽपि महत्तरान् ।
मौर्य्याद्वैसुमचेष्टन्त केचिद्राक्षसपक्षगाः ॥ २८३ ॥
तज्जानन् विष्णुगुप्तोऽपि स्वेच्छाद्राक्षसभेदने ।
बोधिताशेशकर्त्तव्यं भागुरायनमब्रवीत् ॥ २८४ ॥
अन्ये भद्रभटाद्याश्च प्रधानपुरुषास्तदा ।
बोधिताशेषकर्त्तव्या वैरव्याजाद्विनिर्गताः ॥ २८५ ॥
एवं राक्षससम्मोदनोन्मुखे चणकात्मजे ।
चरो निपुणको नाम समेत्य तमवेदयत् ॥ २८६ ॥
श्रेष्ठी चन्दनदासाख्यः कायस्थः शकटाभिधः ।
क्षपणो जीवसिद्धिश्च त्रयोनः परिपन्थिनः ॥ २८७ ॥
तत्र चन्दनदासोऽसौ राक्षसस्य कुटुम्बकम् ।
रक्षतीति ततो लब्धमुद्रामस्मै दिदेश सः ॥ २८८ ॥
मुद्रां राक्षसनामाङ्कां तत्कान्ताकरनिःसृताम् ।
लब्ध्वा मेने स चाणक्यः शत्रुमेवाङ्गुलीगतं ॥ २८९ ॥
पर्व्वतद्राक्षसस्यैव विक्रेतव्यमिति ब्रुवन् ।
द्विजेभ्यो दापयेद्राजा पर्व्वतेन्द्रस्य भूषणम् ॥ २९० ॥

पुरा शकटदासस्य मित्रीकृतमथाब्रवीत् ।
कृत्स्नं त्वयैव साध्यन्तु(?)स्तावादाविभिरक्षरैः ॥ २८१ ॥
लेखमव्यक्तमस्तान्तं शकटेनाभिलेखय ।
मुद्रया मुद्रितं लेखं मुद्राश्चैनां वहन् पुनः ॥ १८२ ॥
शकटं हन्तुमानीतं उन्मुच्योपैहि राक्षसम् ।
तस्माल्लब्ध्वा सुह्रत्प्राणमौल्यितात् पारितोषिकम् ।
मुद्राञ्च दत्त्वा सेवस्व राक्षसं शकटान्वितः ॥ २८३ ॥
युद्धोद्यमे पुनर्मार्गे लेखं म्लेच्छाय दर्शयन् ।
निर्व्विर्मं वाचिकञ्चैव मुक्त्वा त्याजय राक्षसम् ॥ २८४ ॥
इति तस्मिन् विसृष्टे तु नर्म्मे राक्षस-भेदने ।
गूढमादिश्य तद्दोषं घोषयन्निरवारयत् ॥ २८५ ॥
ततः शकटदासस्य शूलारोहणमादिशत् ।
नीतः सिद्धार्थकेनासौ वाह्यान् विद्राव्य घातकान् ॥ २८६ ॥
तावच्चन्दनदासाख्यमाहूय श्रेष्ठिपुङ्गवम् ।
बहुधा चोदयामास दातुं गृहजनं रिपोः ॥ २८७ ॥
तन्मुद्रा दृढसौहार्द्दात् नूनमेकद्विमुक्तये ।
राक्षसोऽप्युपगन्तेति निबबन्धरुषैव तम् ॥ २८८ ॥
तावद्भद्रभटादीनां प्रयामाटाकुले जने ।
अजानन्निव चाणक्यः सर्व्वानाश्वासयं स्थितः ॥ २८९ ॥
सभागुरायणस्तावत् प्राप्य तं पर्व्वतात्मजम् ।
आसीदाभ्यन्तरो मन्त्री कौटिल्याश्रां प्रसादयन् ॥ ३०० ॥
तदुक्तया राजपुत्रेण राक्षसोऽसौ विषादवान् ।
धनाहृतविभूषोऽपि भूषितोऽभूत् स्वभूषणैः ॥ ३०१ ॥
तदा विराधगुप्ताख्यः प्रणिधिः प्राप्य राक्षसम् ।

आदितो वेदयाञ्चक्रे तस्मै पौष्पपुरीं कथाम् ॥ २०२ ॥
स बन्धुना वधं बन्धं श्रेष्ठिनो निजकारणात्।
निधनं शकटस्यापि श्रुत्वा खेदाकुलोऽभवत् ॥ २०३ ॥
तदा शकटदासेन समं सिद्धार्थको गतः।
सम्प्रीताद्राक्षसात्लेभे भूषणं पारितोषिकम् ॥ २०४ ॥
मुद्रायान्तेन दत्तायां तयैवाजनिमुद्रणा।
शकटोलेखकोऽप्यासीत् सिद्धार्थोऽपि च सेवकः ॥ २०५ ॥
ततस्तेनैवचारेण वृत्तशेषे निवेदिते।
भेदं भद्र भटादीनां श्रोकर्ण्येसुमुदेतराम् ॥ २०६ ॥
चाणक्य मौर्य्ययोश्चापि श्रुत्वावैराङ्कुरं पुनः।
मोदादृैतालिकं कञ्चिदादिशद्वैरवृद्धये ॥ २०७ ॥
ततो विक्रेतुमानीतं भूसुरैर्भूषणत्रयम्।
दृष्ट्वा शकटदासोऽयं राक्षसायन्यवेदयत् ॥ २०८ ॥
सोऽपि सिद्धार्थकाद्याशु दत्त प्रागधृत भूषणः।
तत्पदे धर्त्तुमक्रीणात् अलङ्कारानमून् मुदा ॥ २०९ ॥
चाणक्योऽपि च मौर्य्येण व्याजवैरमथाकरोत्।
राक्षसस्तेन विस्रब्धः सैन्यैर्युद्धाय सम्मतेत् ॥ २१० ॥
तत पुष्पपुरासन्नप्रासान् भित्वा मिथो रिपून्।
सैन्यमप्याहरिष्यामीत्येव निश्चितमानसः ॥ २११ ॥
मौर्य्यः पुष्पपुरे तावदारेभे चन्द्रिकोत्सवम्।
चाणक्यो वारयाञ्चक्रे वैरमासीदतस्तयोः ॥ २१२ ॥
चाणक्योपेलया जातो बहुलो निर्गमः पुरात्।
इत्याद्यकथयद्दोषं मौर्य्योऽसौ राक्षसं स्तुवन् ॥ २१३ ॥
तथा वैतालिके नाम्नो कोपस्योद्दीपनैः स्तवैः।

सुतोऽप्यनिवार्य्यन्तं साचिव्यादत्यजद्गुरुम् ॥ २१४ ॥
राक्षसस्तु रिपोर्वैरात् प्राप्तान् भद्रभटादिकान् ।
क्षपणञ्चागतन्दृष्ट्वा मोदमानस्थितस्तदा ॥ २१५ ॥
पुनश्चाणक्य सन्ध्यार्थं चरात् करभकाभिधात् ।
श्रुत्वमति प्रसन्नोऽभूत् सिद्धं मत्वा निजं नयम् ॥ २१६ ॥
किन्तुभद्रभटाद्यास्ते सेवन्तेस्मनृपात्मजम् ।
तैर्व्वापि सूचिताकिञ्चिद्राक्षसस्यारि पक्षता ॥ २१७ ॥
तांशङ्कामेधयाञ्चक्रे चारराक्षस सत्कथाम् ।
गूढं संस्थाप्यतात्पर्य्यं स्खलयन् भागुरायणः ॥ २१८ ॥

चरोहि मौर्य्यः खलु राक्षसं स्तुवन्,
निरासचाणक्य मिति प्रभाषते ।
प्रमोदते तेन च राक्षसोऽधिकम्,
किमेतदित्याह स भागुरायणः ॥ २१९ ॥

तामजानन् प्रभोः शङ्कां रिपुव्यसनदर्शनात् ।
राक्षसोमुदितश्चक्रे भीषण समरोद्यमम् ॥ २२० ॥
निगूढशङ्को भूपोऽपि राक्षसः शक्तिमानिति ।
तदधीन महासैन्यो ययौ पुष्पपुरं प्रति ॥ २२१ ॥
प्राप्तेपुष्पपुरासन्नेऽवभाषि भागुरायणः ।
सम्मुद्रालाञ्छिता एते निर्यान्तु प्रविशन्तु वा ॥ २२२ ॥
कोऽनुजानाति कौटिल्यं प्रकृत्याकुटिलाशयम् ।
अन्योऽन्ये चाणक्यशिष्याश्चाराश्चास्य चरन्ति हि ॥ २२३ ॥
ततः सजीवसिद्धिस्तु राक्षसे रोषवानिव ।
स्थित्वा तस्य समामुद्रां ययाचे भागुरायणम् ॥ २२४ ॥
स च तत प्रसङ्गेन राक्षसं विज्ञापितम् ।

आदितो वेदयामास तस्मै पौष्पपुरीं कथाम् ॥ ३०२ ॥
स बन्धुना वधं बन्धं श्रेष्ठिनो निजकारणात् ।
निधनं शकटस्यापि श्रुत्वा खेदाकुलोऽभवत् ॥ ३०३ ॥
तदा शकटदासेन समं सिद्धार्थको गतः ।
सम्प्रीताद्राक्षसाल्लेभे भूषणं पारितोषिकम् ॥ ३०४ ॥
मुद्रायास्तेन दत्ताया तयैवाजनिमुद्रया ।
शकटोलेखकोऽप्यासीत् सिद्धार्थोऽपि च सेवकः ॥ ३०५ ॥
ततस्तेनैवचारेण वृत्तेऽपि निवेदिते ।
भेदं भद्र भटादीनां चाणक्येसमुदैतराम् ॥ ३०६ ॥
चाणक्य मौर्ययोश्चापि श्रुत्वावैराङ्कुरं पुनः ।
मोदाद्वैतालिकं कञ्चिदादिशद्वैरवृद्धये ॥ ३०७ ॥
ततो विक्रेतुमानीतं भूसुरैर्भूषणत्रयम् ।
दृष्ट्वा शकटदासोऽयं राक्षसायन्यवेदयत् ॥ ३०८ ॥
सोऽपि सिद्धार्थकाचाश दत्त प्रागद्भुत भूषणः ।
तत्पदे धर्त्तुमक्रीणात् अलङ्कारानमून् मुदा ॥ ३०९ ॥
चाणक्योऽपि च मौर्येण व्याजवैरमथाकरोत् ।
राक्षसस्तेन विस्रब्धः सैन्यैर्युद्धाय सम्यतेत् ॥ ३१० ॥
ततः पुष्पपुरासन्नग्रामान् भित्वा मिथो रिपून् ।
सैन्यमप्यग्रहीष्यामौर्येव निश्चितमानसः ॥ ३११ ॥
मौर्य्यः पुष्पपुरे तावदारेभे चन्द्रिकोत्सवम् ।
चाणक्यो वारयामास वैरमासीदतस्तयोः ॥ ३१२ ॥
चाणक्योपितया जातो बहूनां निर्गमः पुरात् ।
इत्याद्यकथयद्बोधं मौर्य्योऽसौ राक्षस स्तवम् ॥ ३१३ ॥
तथा वैतालिके नासौ कोपस्योद्दीपनैः स्तवैः ।

सुतोऽयमिथाव्यक्तं माचिव्यादत्यजद्गुरुम् ॥ २१४ ॥
राक्षसस्तु रिपोर्वैरात् प्राप्तान् भद्रभटादिकान् ।
अपवध्यागतान्दृष्ट्वा मोदमानस्थितस्तदा ॥ २१५ ॥
पुनश्चाणक्य सन्त्यागं चरात् करभकाभिधात् ।
श्रुत्वमति प्रसन्नोऽभूत् सिद्धं मत्वा निजं नयम् ॥ २१६ ॥
किन्तुभद्रभटाद्यास्ये सेवन्तेस्मनृपात्मजम् ।
नैर्व्वाचि सुचिराकिञ्चिद्राक्षसस्यारि पक्षता ॥ २१७ ॥
तांगहामेधयाश्चक्रे चारराक्षस सत्कथाम् ।
गूढं संश्राव्यतात्पर्य्यं च्छलयन् भागुरायणः ॥ २१८ ॥
चरोऽपि मौर्य्यः खलु राक्षसं स्तुवन्,
निरासचाणक्य मिति प्रभाषते ।
प्रमोदते तेन च राक्षसोऽधिकम्,
किमेतदित्याह स भागुरायणः ॥ २१९ ॥
तामजानन् प्रभोः शङ्कां रिपुव्यसनदर्शनात् ।
राक्षसोमुदितश्चक्रे भोषण समरोद्यमम् ॥ २२० ॥
निगूह्यशङ्कां भूपोऽपि राक्षसः शक्तिमानिति ।
तदधीन सहासैन्यो ययौ पुष्पपुरं प्रति ॥ २२१ ॥
प्राप्तेपुष्पपुरासन्नेवभाषे भागुरायणः ।
समुद्रालाञ्छिता एते निर्यान्तु प्रविशन्तु वा ॥ २२२ ॥
कोऽनुजानाति कौटिल्यं सकलाकुटिलाशयम् ।
अन्योऽन्ये चाप्यविज्ञाताश्चाराश्चास्य चरन्ति हि ॥ २२३ ॥
ततः सञ्जीवसिद्धिस्तु राक्षसे रोषवानिव ।
स्थित्वा गन्तु सनामुद्रां ययाचे भागुरायणम् ॥ २२४ ॥
स च तत प्रसङ्गेन राक्षसं विलघातिमम् ।

म्लेच्छ पुत्राय विश्वास्य लब्धमुद्रश्च निर्ययौ ॥ ३२५ ॥
ततश्च राक्षसात्लब्धां भूषां राजसुतार्पिताम् ।
तां पत्रिकाञ्च सिद्धार्थो धृत्वा मुद्रां विनिर्ययौ ॥ ३२६ ॥
गृहीत स्ताड़ितः सोऽथ दर्शयामास भूषणम् ।
मौर्य्ये राक्षस-सन्धान द्योदिकामपि पत्रिकाम् ॥ ३२७ ॥
दृष्ट्वासौ नृपं प्राह त्वां निहत्यैष राक्षसः ।
म्लेच्छेन्द्रैः पञ्चभिःसार्द्धं मौर्य्यमेवाश्रयेदिति ॥ ३२८ ॥
ततोराक्षसमाहूय तस्मिन् स्व पित्र भूषणम् ।
···क्रीतमालोक्य सुक्रोधातितरान्नृपः ॥ ३२९ ॥

शकटालिखितं ततः समुद्रं,
स्फुल पत्रं प्रसमीक्ष्य राक्षसोऽपि ।
शकटेऽपि समग्रतांगतोऽसा,
सुपपन्नैकपटे निरुत्तरोऽभूत् ॥ ३३० ॥

ततो रुष्टेन भूपेन सन्त्यक्तः शकटाद्बहिः ।
खड्गमात्र सहायोऽसौ मज्जितोराक्षसो ययौ ॥ ३३१ ॥
ततोऽसौ कुत्र यातीति ज्ञातु सुन्दुरकाभिधः ।
चाणक्य चारोगच्छन्तं राक्षसं गूढ़मन्वगात् ॥ ३३२ ॥
सिद्धार्थकोऽपि सिद्धार्थीगत्वा पुष्प पुरन्ततः ।
मौर्य्यायमेव हस्तात्तं लेभेमानं मुहत्तरम् ॥ ३३३ ॥
ततो मलय केतुश्च मोहितः स्वैन्य नायकान् ।
पश्यतां पश्यतां निन्ये तेनाभूत्तस्य सैनिकः ॥ ३३४ ॥

त्यक्तं मन्त्रिपदं तदैव समुपारूढो महासैन्यवान्,
चाणक्योदहशोऽथ मात्रवचने खेदात् प्रयाणोन्मुखो ।
तत्राकस्य निजैर्बलैः पर चर्म्म कृत्वा रथाग्रहिपम्,

द्रागाहत्य विघुष्ट जैत्रपटहः सद्यः पुरीमाविशत् ॥ ३३५ ॥
गच्छमाणे च सैन्यौघे निःसहायं नृपात्मजम् ।
बलात् भद्रभटाद्यास्ते ववन्धुः पार्श्ववर्त्तिनः ३३६ ॥
राक्षसोमर्त्तुकामोऽपि श्रेष्ठिस्नेहात् पुरं व्रजन् ।
तद्वृत्तान्तावबोधाय जीर्णोद्यानङ्गतः स्थितः ॥ ३३७ ॥
एतदुन्दुरकाच्छ्रुत्वा चाणक्यः श्रेष्ठिहिंसने ।
श्वपाकवेशं मिद्धार्थं तथान्यञ्च समादिशत् ॥ ३३८ ॥
चारोऽन्यः श्रेष्ठि सौहार्द व्याजात्तदथ दुःखितः ।
जीर्णोद्यानं गतोमर्त्तुं तत्र प्रपच्छराक्षसः ॥ ३३९ ॥
तस्माच्चन्दनदासस्य वधारम्भं निशम्यसः ।
खड्गेन घातकान् हत्वा मोचयिष्यन् प्रतस्थिवान् ॥ ३४० ॥
चरस्तमूचेनतु सायुधस्त्वते, गतिर्वतानिष्टफला च सम्भवेत् ।
धृतायुधं कञ्चनवीक्ष्य दूरतो वध्यं निहन्युर्द्रुतमेवघातकाः ॥ ३४१ ॥
इत्युक्तो मुक्तशस्त्रोऽसौ दातु कामोनिजातनुम ।
सद्योवध्य भुव प्राप्य घातकास्त्रेवमब्रवीत् ॥ ३४२ ॥
अहमेवास्मिहन्तव्यः साधुरेषः समुच्यताम् ।
मुख्यलाभे पुनः कस्मात् प्रतिनिध्युपसंग्रहः ॥ ३४३ ॥
इत्युक्तः श्वपचः प्राप्त चानक्यायन्यवेदयत् ।
सोऽपिराक्षससमासाद्य सादरं प्रणनामतत् ॥ ३४४ ॥
भो रक्षस्व समस्तोऽयं व्याजस्त्वत् सन्निकाम्यया ।
कृतोऽस्माभिर्नतुद्वेषादित्यूचे चणकात्मजः ॥ ३४५ ॥
सादरं चन्द्रगुप्तोऽपि प्राप्यतं कुलमन्त्रिणम् ।
सादरं सविनयं तस्थौ चाणक्यः पुनरुचिवान् ॥ ३४६ ॥
मत्वा सविनयं तस्थौ चाणक्यः पुनरुचिवान् ॥
अयि ! चन्दनदासस्य जीवितं यदि काङ्क्षते ।

तस्मिन्निपदं याहि इनिष्याम्यमुमन्यथा ॥ ३४७ ॥
इत्युक्तः सोऽनुमत्यैव गृह्णमानः सुहृद्वधम् ।
अनिच्छन्नपि साचिव्यं जग्टहे राक्षसः स्वयम् ॥ ३४८ ॥
तावद् भद्रभटादिकैरुपहृतं दृष्ट्वा च बद्धं रिपुम् ।
पृष्ट्वा राक्षसमेव तस्य वचसा तस्मै ददौ स्थानकम् ।
किञ्चान्यं निजराज्यमस्य नृपति-सम्मानमुर्व्वैर्ददौ,
प्रीत्याहूय तदैव सर्व्वनगरश्रेष्ठ्यन्ददौ श्रेष्ठिने ॥ ३४९ ॥

तद्वचान्ये कुसुमपुरजा राक्षसस्य प्रियार्थे,
चाणक्यस्तानभिमतशतैः प्रीणयामास राज्ञा ।
आसीदन्यादृशमिव तदा राक्षसस्यापि चेतः,
सम्मानैश्च क्षितिपतिगुणैः प्रेम चासीत् क्रमेण ॥ ३५०
प्रतिज्ञां तीर्त्वैवं विपुलमतिराबध्य च शिखाम्,
निराशोऽपि प्रीत्या नरपतिकृताशेषविभवः ।
स कौटिल्यो धर्म्मान् विधिवदकरोदात्मभवने,
वदन् काले काले हितमखिलमस्मै नरभुजे ॥ ३५१ ॥
स चन्द्रगुप्तोऽपि विधाय भाग्यवान्,
योग्यां पितृ-भ्रातृ-बधप्रतिक्रियाम् ।
गुणोत्तरं राक्षसमाप्य मन्त्रिणम्,
नवे वयस्यन्वगोपमर्हों सुखम् ॥ ३५२ ॥

इति रविनर्त्तक-विरचिता चाणक्यकथा-समाप्ता ।

---

समाप्तश्चायं ग्रन्थः ॥

পরমারাধ্য

পিতৃদেবের করকমলে

আমার অনূদিত চাণক্যকথা

উৎসর্গীকৃত হইল

শ্রীসতীশ—

# চাণক্য কথা।



১। যিনি স্বভাবপূজিত মূর্ত্তির দ্বারা জ্ঞানিগণের আনন্দ-বর্দ্ধন করেন, যিনি বেদবাক্যের দ্বারা প্রতিপাদিত হইয়া থাকেন, সেই শ্রীমান্ নারায়ণ জয়যুক্ত হউন।

২। যে বুদ্ধিবলে ভূদেব চাণক্য কি কার্য্যই না সাধন করিয়াছেন সেই পুরুষদিগের সর্ব্বার্থ-সাধিনী বুদ্ধি জয়যুক্ত হউক।

৩। চাণক্যের সেই ইতিবৃত্ত (অদ্যাবধি) গদ্যরূপে বিদ্যমান রহিয়াছে। সম্প্রতি রবিনর্ত্তক তাহা পদ্যাকারে পরিণত করিতে উদ্যত হইয়াছেন।

৪। প্রচণ্ড নীতি নৈপুণ্য-সূচক এবং অদ্ভুত বীরত্বপূর্ণ এই চাণক্য-কথার দ্বারা কোন্ বুদ্ধিমান্ ব্যক্তি অতিশয় আনন্দিত না হন?

৫। স্থিরসম্পৎ ভূপালগণ-শোভিত এবং রত্নকিরণের দ্বারায় পাটলরাগরজিত পাটলিপুত্র নামক রাজধানী গঙ্গাতীরে বিরাজ করিতেছে।

৬। সেই নগর বহুজাতির দ্বারা পরিপূর্ণ; তথায় কাহারও শোকের লেশ মাত্র ছিল না। জনসকল তাহাকে পবিত্র এবং তিলকের ন্যায় পৃথিবীর শীর্ষস্থানীয় বলিয়া বর্ণন করিয়া থাকেন।

৭। সর্ব্বার্থসিদ্ধি (যাঁহার অপর নাম নন্দ) নামক নরপতি তথায় রাজত্ব করিতেছিলেন। রাক্ষস নামক তাঁহার একটি রুক্ষস্বভাব সম্পন্ন মন্ত্রী ছিলেন।

৮। সেই রাক্ষস সত্য সত্যই লঙ্কায় উপনিবেশ স্থাপন না করিয়াও রামচন্দ্রাদির (ন্যায় গুণিগণের) প্রতি বিরূপ ছিলেন এবং নাতিকুশল ব্যক্তিদিগকে ভালবাসিতেন।

৯। অনন্তর সেই নন্দভূপতি সুনন্দানাম্নী একটি

এবং মূর্তিমান্ কন্দর্পাস্ত্রের ন্যায় দীপ্তিমতী মুরানাম্নী অপর একটি শূদ্র পত্নীকে লাভ করিয়াছিলেন।

১০। রাজা নন্দের সন্তানলাভ না হওয়ায় তিনি অত্যন্ত বিষণ্ণ হইয়াছিলেন।

১১। তৎকালে জনৈক তপস্বী পাটলিপুত্রে আগমন করিলে রাজা নন্দ তাঁহাকে সম্মান করিয়া স্বীয় পুরে আনয়ন পূর্ব্বক পাদ্য ও অর্ঘ্যের দ্বারা পূজা করিয়াছিলেন।

১২। সেই তপস্বীর পবিত্র পাদপ্রক্ষালনোদক রাজা মহিষীদ্বয়ের মস্তকে সিঞ্চন করিলে তাহা হইতে মুরা এক বিন্দু ও অপর মহিষী নয় বিন্দু পাইয়াছিলেন।

১৩। সেই জল মুরা প্রীতি ও ভক্তি সহকারে এবং অতিমানিনী সুনন্দা অবহেলায় গ্রহণ করিয়াছিলেন।

১৪। তপস্বী (জলবিন্দু সিঞ্চন কালে) উভয়ের অবস্থা দেখিয়া মুরার প্রতি অতিশয় প্রসন্ন হইলেন এবং কার্য্য সম্পন্ন হইলে মহারাজের নিকট বিদায় লইলেন।

১৫। তদনন্তর অবিলম্বে ভাগ্যবতী মুরা গর্ভধারণ করিয়া যথাকালে অতি মহিমাযুক্ত মৌর্য্য নামক সুন্দর তনয় প্রসব করিলেন।

১৬। কিয়দ্দিন পরে কুমার উপযুক্ত বয়ঃপ্রাপ্ত হইলে মহারাজ বিনয়বিভূষিত কুমারকে বেদ ব্যতিরেকে অপরাপর শাস্ত্র ও অস্ত্র পরিচালনে আচার্য্য কর্তৃক শিক্ষিত করাইয়াছিলেন।

১৭। মহারাজ এই অশেষগুণ-ভূষিত সুন্দর কুমারদ্বারা অতিশয় তৃপ্ত হইয়াছিলেন, এবং কুমারও তাঁহার আজ্ঞাধীন ছিলেন। এইরূপে মৌর্য্য জননীদ্বয়ের ও প্রজাবর্গের আনন্দ বৃদ্ধি করিয়াছিলেন।

১৮। অনন্তর মহিষী সুনন্দা তাঁহার চিরবাঞ্ছিত গর্ভধারণ করিলেন এবং মহারাজাও আনন্দ সহকারে ক্রমে ক্রমে তাঁহার গর্ভাধানাদি সংস্কার অনুষ্ঠান করাইলেন।

১৯। তাহার পর দশম মাসে মহিষী সুনন্দা এক মাংসপিণ্ড প্রসব করিলে, সেই প্রসূত মাংসপিণ্ড দেখিয়া মহারাজ, মন্ত্রী, ও অন্তঃপুরবাসীগণ অতিশয় খেদযুক্ত হন।

২০। এই সময় মহারাজের প্রতি দৈববাণী হইল,—'মহারাজ। বিষাদগ্রস্ত হইও না—ইহা হইতে তোমার নয়টি পুত্র উৎপন্ন হইবে।'

২১। মহারাজ এইরূপ আকাশবাণী শ্রবণ করিয়া শোক ব্যাকুল হইলে সুধী মন্ত্রী রাক্ষস চিন্তাপূর্ব্বক গান্ধারীর বৃত্তান্ত স্মরণ করিলেন।

২২। রাক্ষস সেই মাংসপিণ্ডকে নয় ভাগে বিভক্ত করিয়া তৈল পূর্ণ ভাণ্ডে রাখেন।

২৩। তৎপর যথাকালে একসঙ্গে উক্ত নয়ভাগে বিভক্ত মাংসপিণ্ড হইতে নয়টী কুমার জন্মগ্রহণ করিলে মহারাজ অতিশয় হৃষ্ট হইয়া নবজাত কুমারগণের জাতকর্ম্মাদিকার্য্য সম্পন্ন করিলেন।

২৪। যথাকালে রাজকুমারগণ ধনুর্ব্বেদ, নীতি প্রভৃতিতে সুশিক্ষিত, হইয়াছিলেন এবং যৌবন প্রাপ্ত হইলে রাজা তাঁহাদিগকে আহ্বান করিয়া আনয়ন পূর্ব্বক মন্ত্রিগণের সহিত রাজ্যহিতকর নানাবিষয়ের আলাপ করিয়াছিলেন।

২৫। এই নয়টি পুত্রের মধ্যে আমি কোনটীকেও প্রবীণ দেখিতেছি না, যাহার উপর রাজ্যভার ন্যস্ত করিয়া আমি সুখে বিশ্রাম করি।

২৬। আপনারা বলুন এ বিষয়ে কর্ত্তব্য কি? আপনাদিগের উপদেশই আমার দৃষ্টিশক্তির ন্যায় অর্থতত্ত্ব উন্মেষ করে। মুরাপুত্রকে নিশ্চয় সেনাপতিত্বে বরণ করা কর্ত্তব্য।

২৭। রাজবাক্য শ্রবণ করিয়া মৌর্য্য চিন্তা করিলেন, আমি জ্যেষ্ঠ, আমাকে রাজ্য না দিয়া সৈনাপত্যরূপ ছলগর্ভ দাসবর্গে পিতা স্নেহশূন্য হইয়া নিশ্চয় আমাকে নিয়োগ করিতেছেন।

২৮। এই নরপতি আমাকে রাজ্যাংশ মাত্রও প্রদান করিতে

